VI (4)

गतीव्रधकोमलयुक्तमेले । एकः पूर्णः । चत्वारः षाडवाः । षडौडवाः ।

उदाहरणम्—

सरिगमपधनि । १ । सगमपधनि । १ । सरिगपधनि । २ ।
सरिगमधनि । ३ । सरिगमपध । ४ । सगपधनि । १ ।
सरिगधनि । २ । सरिगमध । ३ । सगमधनि । ४ ।
सगमपध । ५ । सरिगपध । ६ ।

VI (5)

तीव्रगतीव्रनियुक्तमेले । एकः पूर्णः । चत्वारः षाडवाः । षडौडवाः ।

सरिगमपधनि । १ । सगमपधनि । १ । सरिगपधनि । २ ।
सरिगमधनि । ३ । सरिगमपनि । ४ । सगपध[नि] । १ ।
सरिगधनि । २ । सरिगमनि । ३ । सगमधनि । ४ ।
सगमपनि । ५ । सरिगपनि । ६ ।

VI (6)

तीव्रतरमकोमलधयुक्तमेले । एकः पूर्णः । चत्वारः षाडवाः । षडौडवाः ।

उदाहरणम्—

सरिगमपधनि । १ । सगमपधनि । १ । सरिमपधनि । २ ।
सरिगमधनि । ३ । सरिगमपध । ४ । समपधनि । १ ।
सरिमधनि । २ । सरिगमध । ३ । सगमधनि । ४ ।
सगमपध । ५ । सरिमपध । ६ ।

VII (7)[1]

कोमलरितीव्रतरम-कोमलधयुक्तमेले ।
एकः पूर्णः । त्रयः षाडवाः । औडवास्त्रयः ।

---
[1] Having three svaras.

उदाहरणम्—

सरिगमपधनि । १ । सरिमपधनि । १ । सरिगमधनि । २ ।
सरिगमपध । ३ । सरिमधनि । १ । सरिगमध । २ ।
सरिमपध । ३ ।

VII (8)

कोमल-रि-कोमल-ध-पूर्वनिषाद्-युक्तमेले ।
एकः पूर्णस्त्रयः षाडवाः । औडवास्त्रयः ॥

उदाहरणम्—

सरिगमपधनि । १ । सरिमपधनि । २ । सरिगपधनि । २ ।
सरिगमधनि । ३ । सरिपधनि । १ । सरिगधनि । २ ।
सरिमधनि । ३ ।

VII (9)

रि-कोमल-तीव्र-ध-तीव्र-नि-युक्तमेले ।
एकः पूर्णस्त्रयः षाडवाः । औडवास्त्रयः ।

उदाहरणम्—

सरिगमपधनि । १ । सरिमपधनि । १ । सरिगमधनि । २ । सरिगपधनि । ३
सरिपधनि । १ । सरिगधनि । २ । सरिमधनि । ३ ।

VIII (10)[1]

कोमल-रि-तीव्रतर-म-कोमल-ध-पूर्वनिषादयुक्तमेले ।
एकः पूर्णः । द्वौ षाडवौ । औडव एकः ।
सरिगमपधनि । १ । सरिमपधनि । १ । सरिगमधनि । २ ।
सरिमधनि । १ ।

VIII (11)

कोमल-रि-तीव्रतर-म-तीव्रतर-ध-तीव्र-नि-युक्तमेले ।
एकः पूर्णः । द्वौ षाडवौ । औडव एकः ।

---

1 Having four svaras

सरिगमपधनि । १ । स[ रि ]मपधनि । १ । सरिगमधनि । २ ।
सरिमधनि । १ ।

VIII ( 12 )

रि-कोमल-म-तीव्रतर-ध-कोमल-नि-तीव्रयुक्तमेले ।
एकः पूर्णः । द्वौ षाडवौ । औडव एकः ।

उदाहरणम् —

सरिगमपधनि । १ । सरिमपधनि । १ । सरि[ ग ]मधनि । २ ।
सरिमधनि । १ ।

VIII ( 13 )

ग-तीव्र-म-तीव्रतर-ध-कोमल युक्त मेले ।
एकः पूर्णस्त्रयः षाडवाः । औडवास्त्रयः ।

उदाहरणम्—

सरिगमपधनि । १ । सगमपधनि । १ । सरिगमधनि । २ ।
सरिगमपध । ३ । सगमधनि । १ । सरिगमध । २ ।
सगमपध । ३ ।

VIII ( 14 )

तीव्र-ग-तीव्रतर-म-तीव्र-नि-युक्त मेले ।
एकः पूर्णस्त्रयः षाडवाः । औडवास्त्रयः ।

उदाहरणम्—

सरिगमपधनि । १ । सगमपधनि । १ । सरिगमधनि । २ ।
सरिगमपध । ३ । सगमधनि । १ । सरिगमध । २ । सगमपध । ३ ।

VIII ( 15 )

तीव्र-ग-तीव्रतर-म-तीव्र-नियुक्त मेले ।
एकः पूर्णस्त्रयः षाडवाः । औडवास्त्रयः ।

उदाहरणम्—

सरिगमपधनि । १ । सगमपधनि । १ । सरिगमधनि । २ ।
सरिगमपनि । ३ । सगमध[नि] । १ । सरिगमध । २ ।
सगमपध । ३ ।

इति व्यवधानविकृतस्वरमेलाः ॥

## [ अथ रागप्रकरणम् ]

षाडवेषु च पूर्णेषु मेलेषु सकलेषु च ।
आरोहणेऽवरोहे च स्वरत्यागसमन्विताः ॥ १ ॥
मूर्च्छनाभेदसम्पन्ना गमकादिव्यवस्थिताः ।
व्यवस्थिताः श्रुतिस्थानयोग्यजातीभिदायुजः ॥ २ ॥
रागा अथ मिताः प्रोक्ता लक्ष्यलक्षणकोविदैः ।
युगपद्द्वयविश्लिष्टाः स्वरयोरौडवा यदि ॥
न तथा रञ्जकास्ते स्युस्तथाप्यत्र मयोदिताः ॥ ३ ॥

**इत्येकैकषाडवसम्पूर्णमेलेषु रागबाहुल्यकथनम् ।**

अथ शुद्धस्वरैरेव शुद्धैर्विकृतैरपि ।
निर्मिता विकृतैरेव तेषां लक्षणमुच्यते ॥ ४ ॥
आदावुद्गृह्यते येन स तानोद्ग्राहसंज्ञकः ।
आद्यन्तयोश्चनियमस्ताने यत्र प्रजायते ॥ ५ ॥
स्थायीतानः स विज्ञेयो लक्ष्यलक्षणकोविदैः ।
सञ्चारी स तु विज्ञेयः स्थाप्यारोहणमिश्रितः ।
यत्र रागस्य विश्रान्तिः समाप्तिद्योतको हि सः ॥ ६ ॥

I

[ सैन्धवरागः ]

शुद्धमेलोद्भवः पूर्णो धैवतादिकमूर्धनि [ मूर्च्छनः ][1] ॥ ७ ॥

---

१ Cf verse 357 of संगीत-पारिजात, which reads मूर्च्छनः instead of मूर्धनि and आरोहे गनि वर्ज्यः for गति वर्ज्यः ।

आरोहे गनिवर्ज्यः स्याद्रागः सैन्धवनामकः ।
ध स रि म प म ग रि स नि ध ध स । इत्युद्ग्राहः ।
ध स रि म मा ग रि रि प पा म ग रि रि नी ध प म गा
री री म ग रि रि ग रि स नि ध स स । इति स्थायी ।
ध स स रि री म म प प ध ध स ।
म ग रि रि ग रि स नि ध प ध म प ध म प म ग
रि स रि म मा ग रि रि प प म ग रि रि प म ग रि
रि म ग री ग रि स रि स नि ध ध स स । इति सञ्चारी ।
सा स ध सा रि म पा नी ध प म प ध म पा म पा म
गा रि गा रि गा रि स री स नी ध ध सा ।
इति मुक्तायी । इति सैन्धवः ॥ १ ॥

2

[ नीलाम्बरी ][१]

नीलाम्बरी तु सम्पूर्णा षड्जपूर्वकमूर्च्छना ।
शुद्धमेले समुद्भूता बहुकम्पमनोहरा ॥
स रि ग म प ध नि सा नि ध प म ग रि सा ।
इत्युद्ग्राहः ।
ग ग्ग ग रि । म म्म ग ग गा रि ग री स रि स ।
स स प प म प प म प ध नि ध प म । प ध नि स नि ध प
म प ध नि ध प म प ध नि ध प मा ग ग ग रि स रि स ।
इति स्थायी ।
स स रि ग म प प नि नि नि ध नि नि ध स स नि ध
नि नि ध प ध ध प म प प म गा म म ग रि म ग-
रि ग स रि स । इति सञ्चारी ।
स स पा प म प ध नि सा गा रि स गा रि स नि ध प म ।
प म प मा गा ग रि स रि सा । इति मुक्तायी ।
इति नीलाम्बरी । २ ।

[१] Cf verse 362-363 सं. पा.

3

[ धन्याश्रीः ][1]

आरोहे रिध-हीना स्यात्पूर्णा शुद्धस्वैरैर्युता ।
गान्धारस्वरपूर्वा स्याद् धन्याश्रीर्मध्यमं गता ॥[2]

ग म प नि स ग रि स नि ध प म ग ग म प म ग म ग रि स ।
इत्युद्ग्राहः ।

ग म प नि ध प म मा ग ग म प नि स नि ध प म मा ग ग म प-
नि न्नि ध प म मा ग ग म प नि स नि ध प म म गा ग-
ग म प ग म ग रि स ।   इति स्थायी ।

ग म प नि सा नि ध प मा ग । ग म पा प म म मा ग ।
ग म प नी नि ध प मा ग । ग म प नी नि ध प मा ग ।
ग म प ग म ग रि स । प नि स ग री स रि स नि स स्स ।
इति मुक्तायी ।  इति सम्पूर्णधनाश्रीः ॥ ३ ॥

4

[ षाडवधन्याश्रीः ][3]

[4]अथवा रि( हि )धहीना सा रिधहीनापि सा मता ।
ग म प नि स रि प म ग ग म प रि प म ग । ग मगरिस ।
ग म प ग म ग रि स ग रि स रि स । प नि स ग रि स रि स नि स
इति षाडवधनाश्रीः ॥ ४ ॥

5

[ औडव धनाश्रीः ][5]

ग म प नि स स नि प म ग । म ग म प ग म ग रि स ।
प नि स ग स नि प नि स स ग म प ग म गा स म म ग ।
स ग स नि स स्स ।   इति औडवधनाश्रीः ॥ ५ ॥

---

१. cf. Verse 358 of सं. पा.
२. Other reading मध्यमान्तका instead of मध्यमं गता.
३. cf. Verse 359 of सं. पा.
४. धनाश्रीश्च ध-हीना सा. रि-ध-हीनापि सम्मता ॥ Vide Śl. 359 of सं. पा.
५. cf. Verse 359 of सं. पा.

6

[ मालवश्रीः ][१]

रि-हीना मालवश्रीः स्यात् शुद्धमेलस्वरोद्भवा ।
मध्यमादिस्वरोद्ग्राहा धांशयुक्तान्यपा स्मृता ॥

प म प नि नि स म म ग स नि नि ध प ध प म म पा प म मा गा स
इत्युद्ग्राहः ॥

स स ध ध प म म प म म ग स । ध प म प म म गा स ।
स स ध प म म प नि नि स । प नि ध म म म ग स ।
ध ध प म म प म म ग स । नि नि स नि नि स म म ग स ।
म ग स । नि नि नि स स्स । इति स्थायी ।
नि ध नि स स्स नि स स्स प प नि ध म प नि नि स सा ग-
स नि नि स स्सा । इति मुक्तायी । इति मालवश्रीः । ६ ॥

7

[ रक्तहंसः ][२]

ग-हीनो रक्तहंसः स्यादारोहे नि-स्वरोज्झितः ।
अवरोहे ध-वर्जः स्यात् षड्जपूर्वक मूर्ध( र्च्छ )नः ॥

स रि म प ध स स नि प म रि स । इत्युद्ग्राहः ।
सा रि म प ध ध प म प म म रि स नि प ध स ध स रि म रि-
म प ध ध प स स नि प म म प म म म रि स । इति स्थायी ।
सा सा नि पा म म मा ध धा ध प म मा पा प म रि स ।
इति मुक्तायी । इति रक्तहंसः । ७ ।

8

[ कोल्हासः ][३]

मोज्झितः कोल्हासः स्याद् गान्धारादिकमूर्च्छनः ।
अवरोहे ध-वर्जः स्यात् षाडवः परिकीर्तितः ।

---

१ cf. Verse 364 of सं. पा.
२ ,, 365 ,,
३ ,, 377 ,,

ग प ध नि स रि ग रि स नि प ग प ग रि स । इत्युद्ग्राहः ।
प द [ ध ] नि स स नि प ध नि स म नि प । ध नि स रि स स नि
प ध नि स रि स स नि प । ध नि स रि रि ग रि स सा नि प ध-
नि स रि रि प ग रि ग रि स स नि प ध नि स सा ।
इति स्थायी ।
सा सा नि पा गा पा ग ग ग ग रि स रि रि स सा । इति मुक्तायी ।
इति कोल्लहासः ॥ ८ ॥

9

[ प्रसभः ]

षड्जादिमूर्च्छनोपेतः प्रसभः पञ्चमोज्झितः ।
स रि ग म ध नि स स नि ध म ग ग ग रि स । इत्युद्ग्राहः ।
ग ग री स नि स ध नि स रि स नि सा ग ग म ग ग रि सा
नि ध नि सा । ग ग म नि नि ध म ग ग रि सा नि नि स सा ।
इति स्थायी ।
सा सा नि धा म नि नि स रि स नि नि स सा । इति मुक्तायी ।
इति प्रसभः । १ ।

10

[ मध्यमादिः ]

[१]ग-ध-वर्ज्या मध्यमादिर्मध्यमादिकमूर्च्छना ।
म प नि स रि म रि स रि प म प म म रि स नि स सा ।
इत्युद्ग्राहः ।
नि स रि म रि स रि स नि स रि म रि रि म रि स रि स नि स ।
प प नि प म प प प म रि म रि स रि रि नि स स्स ।
नि स रि म रि स सा नि । म प नि स नि स नि स स नि ।
नि स रि म रि म रि स रि स सा नि । प न्नि स नि स रि-
नि स स्सा । इति स्थायी ।

१ cf. Verse 380 of संगीत-पारिजात.

पा पा नि पा म प प म रि । रि रि पा म रि मा रि स रि स नि-
स स्सा । इति मुक्तायी । इति मध्यमादिः ॥ १० ॥

11

[ मेघनादः ][1]

रिणायुक्तः कोमलेन मेघनादस्तु षाडवः ।
स-स्वरादिस्वरारब्धो मवर्जोऽपि रिगांशकः ॥

स रि ग प ध नि स स नि ध प ग ग ग ग रि स रि स । इत्युद्ग्राहः ।
ग ग ग रि स रि स नि स ध नि स रि रि ग रि स । प ग प ग रि रि
ग रि स । ध नि स रि रि ग रि स रि स नि स ध नि स ग रि स रि-
स ध नि स रि रि ग रि स । रि स नि स स्सा । इति स्थायी ।
सा सा नि ध नि स स्सा । नि ध प ध प ग प ग रि रि ग रि स-
नि स स्सा । इति मुक्तायी । इति मेघनादः ॥ ११ ॥

12

[ तोडी ][2]

षड्जपूर्वा तु तोडी स्याद्यत्रोक्तौ कोमलौ रिधौ ।
धैवताख्यः स्वरो न्यासो गान्धारोंश इतीरितः ॥

स रि ग म प ध नि स स नि ध प म ग रि स। इत्युद्ग्राहः ॥
ग ग ग रि स रि स न्नि ध। ध नि स रि ग म गा रि सा नि धा ।
ध नि स रि ग म धा ध प म गा रि स न्नि धा ।
ग ग्ग ग रि ग रि स रि । नि स रि नि स रि नि स नि ध ।
ध नि स रि नि स सा । इति स्थायी ।
स म ग रि स नि ध ध ध नि स रि नि स स्सा । इति मुक्तायी ।
इति तोडी ॥ १२ ॥

12 (a)

[ छायातोडी ][3]

छायातोडी तथैव स्यान्निपाभ्यां रहिता सदा ।
इति छायातोडी ॥ [ १२ अ ]

---

१ cf Verse 385 of सं. पा.
२ ,, 386 ,,
३ ,, 387 ,,

13

[ भैरवी ][१]

षड्जादिमूर्च्छनायुक्ता भैरवी स्याद्धकोमला ।
स रि ग म प ध नि स नि ध प म ग रि स । इत्युद्ग्राहः ॥
ग ग रि स नि स ग रि स नि स ग ग म ग ग ग रि स नि स ।
ध प म म प म ग ग म ग ग ग रि स नि स ।
प ध नि स रि स नि नि स स्सा ।
स नि ध प म ग रि ग रि स ग रि ग म प म ग रि स म ग रि ग रि स
रि स नि नि स स्सा । इति स्थायी ।
मा पा नि नि स गा ग रि स रि रि स नि नि स स्सा ।
इति मुक्तायी । इति भैरवी ॥ १३ ॥

14

[ घण्टारागः ][२]

घण्टारागो ग-पूर्वः स्याद्यतः ( न्यन्तः ) कोमलधैवतः ।
ग म प ध नि स नि ध प म ग रि स । इत्युद्ग्राहः ।
ग म प ध प म ग रि स रि नि ।
प नि स रि रि स नि सा । इति स्थायी ।
प प प प नि ध नि स रि नि स स्सा । इति मुक्तायी ।
इति घण्टारागः ॥ १४ ॥

15

[ बङ्गाली ][३]

बङ्गाली रिध-हीना स्यान्मतीव्रतरसंयुता ।
नि-तीव्रेणापि संयुक्ता सस्वरोत्थितमूर्च्छना ॥
स ग म प नि स स नि प म ग स । इत्युद्ग्राहः ।

---

१ cf Verse 374 of सं. पा.
२ ,, 389 ,,
३ ,, 381 ,,

ग म प नि स स स नि प ग म ग म ग स ।

प म ग म ग म ग स नि स स स्सा । इति स्थायी ।

सा नि प मा ग स ग स नि स स्स । इति मुक्तायी ।

इति बङ्गाली । १५ ।

16

[ वराटिका ][1]

रि-कोमला ग-तीव्राद्या कोमलीकृतधैवता ।
नि-तीव्रेणापि संयुक्ता वराटी धैवतादिका ॥

ध ध नी स रि ग म प म ग रि स नि धा नी स ।

रि ग म प म ग रि स नि धा नी सा । इत्युद्ग्राहः ।

ग म प म ग रि स । ग म प ध प म ग रि स ।

स रि ग रि स नि स्स ध नि स ध नि स ।

ग रि नी ध ध नी सा । इति स्थायी ।

स स्स गा री स नि ध नी स स्सा ।

गा मा पा धा पा म म गरि नि स ।

ध ध नी स । इति मुक्तायी । इति वराटिका । १६ ।

17

[ खम्भावती ][2]

खम्भावती पहीना स्यात्कोमलीकृतधैवता ।
गान्धारमूर्च्छनायुक्ता रिणा त्यक्ताऽवरोहिका ।

ग म ध नि स रि स नि ध म ग स नि स स्स । इत्युद्ग्राहः ।

स स नि ध नि स स्सा नि ध नि ध म ग ग म ग स ।

रि स नि स रि स नि स रि स नि स स्सा । इति स्थायी ।

सा नि ध म नि ध नि स रि स नि स स्सा । इति मुक्तायी ।

इति षंभा( खम्भा )वती । १७ ।

---

१. cf Verse 390 of सं. पा.

२. ,, 398 ,,

18

[ आभीरिका ][1]

ध-कोमला नि-तीव्राण्या( द्या )षड्जपूर्वकमूर्च्छना ।
धगयोश्च ( धगयोः ) कम्पसंयुक्ता सपांशाभीरिका मता ।
स रि ग म प ध नि ध प म गा रि स नि धा प प स स्सा ।
इत्युद्ग्राहः ।
प नि स ग रि स नि स ।
प प्प म गा रि स नि स । स स पा म प ध प म गा रि स नि सा ।
प ध ध ध प ग प म गा रि स नि स स्सा । इति स्थायी ।
सा नि धा प गा म प म पा म गा रि स नि स स्सा ।
इति मुक्तायी । इत्याभीरिका । १८ ।

19

[ गौरी ][2]

रजनीमूर्च्छनायुक्ता रि-कोमल-ध-कोमला ।
ग-तीव्रा सा-नि-तीव्रा च गौरी न्यंशम्वरा मता ।
आरोहे गध-हीना सा निकपा( म्प )[3]नमनोहरा ।
आरोहे यदि गान्धारो मध्यमावधि मूर्च्छना ।
रि म प नी स नि ध प म ग रि ग रि स । इत्युद्ग्राहः ।
नि स रि म्मा ग रि ग रि नी सा । रि म पा म ग रि ग रि नि स ।
नि स रि मा ग रि ग रि नि स स्स । इति स्थायी ।
स नि ध प म ग रि ग रि नी सा । इति मुक्तायी । इति गौरी । १९ ।

20

[ कल्याणः ][4]

मस्तु तीव्रतरो यस्मिन् गनी तीव्राविततीरितौ ।
गान्धारोद्ग्राहकल्याणे मन्यारोहे न तिष्ठतः ।

---

१. cf. Verse 399 of सं. पा.
२. ,, 366-7 ,,
३. There should be नि-कम्पन instead of 'निकपान' vide verse 367 of सं. पा.
४. cf Verse 400 of सं. पा.

ग प ध स ग रि स स नि ध प प ध प म ग गा रि स । इति स्थायी ।
पा म ग रि स नि ध प ध सा । इति मुक्तायी । इति कल्याणः । २० ।

21

[ रामकरी ][१]

रि-कोमला ग-तीव्रा वा म-तीव्रतरसंयुता ।
ध-कोमला नि-तीव्रा च ख्याता रामकरीति सा ॥
आरोहे म-नि-वर्ज्या स्यात्पांशा धैवतमूर्च्छना ।
ग प ध स स नि ध धा प मा पा म गा रि स । इत्युद्ग्राहः ।
प म ग मा पा ग ध सा गा रि स स रि स रि स स स स ।
ध ध प म ग गा रि स स रि स रि स रि स स स स स । इति स्थायी ।
पा म गा रि स स स रि स रि ग प ध स स्स । इति मुक्तायी ।
इति रामकरी । २१ ।

22

[ सारङ्गः ][२]

अतितीव्रतमो गः स्यान्मस्तु तीव्रतरो मतः ।
धस्तु तीव्रतरो निः स्यात्तीव्रः षड्जादिमूर्च्छनः ॥
सन्यासे मध्यमांशे च रागे सारङ्गसंज्ञके ।
स रि ग म प ध नि स स नि ध प म ग रि स । इत्युद्ग्राहः ।
म प म ग ग रि स । स स रि ग म प म प म ग रि स ।
प म ग रि स म ग रि स । स स स रि ग ग म प म प म ग रि स ।
रि स रि स सा । इति स्थायी ।
स स नि ध प ध प म प म ग रि स रि स रि स-स । इति मुक्तायी ।
इति सारङ्गः । २२ ।

---

१. cf Verse 401 of सं. पा.
२. ,, 402 ,,

II *

23

[ मालवी ][1]

रिधौ च कोमलौ यत्र ग-नी तीव्रौ च मालवे ।
षड्जावरोहणोद्ग्राहः सरिमन्य( न्यासां )[2] शशोभिते ॥

सा स स नि ध प ध नी ध प म प म ग मा री स ।
स पा म ग मा री स नि स रि स स नी ध प मा प स सा ।
इति मालवी । २३ ।

24

[ गुणक्रिया ][3]

रिधकोमलसंयुक्ता ग-नि-वर्जा गुणक्रिया ।
धैवतोद्ग्राहसंयुक्ता क्वचिद् गान्धारसंयुता ॥

ध स सा ध प म प पा म मा रि सा स ध ध ध ध प म प पा म मा रि स
स रि गा ग रि स । ध रि स स स स स ध स स स स
मा रि स स रि स । र( इ )ति गुणकरी । २४ ।

25

[ ककुभा ][4]

मालवस्त्ररसम्भूता ककुभा षड्जमूर्च्छना ।

स स्स रि म म प नि नि स नि नि नि ध प म प म म मा ग रि
रि रि रि ग ग रि सा । इति ककुभा । [ २५ ]

---

* Where only two parts are given instead of four.

1. cf Verse 403 of सं. पा.

२. Other reading न्यासां instead of मन्यं.

३. cf Verse 404 of सं. पा.

४ cf Verse 405 of सं. पा.

26

[ वेलावली ][1]

वेलावल्यां ग-नी तीव्रौ मूर्च्छना चाभिरुग्द्ता ।
अवरोहे ग-वर्जायां क्वचिद् गान्धारमूर्च्छना ॥

रि ग म ध ध प म गा मा रि सा [2]स स नि ध प म ग म प ध प म-
प म ग मा री सा ग प ध सा स नि ध प धा प म गा मा री सा ।
इति वेलावली । २६ ।

27

[ केदारी ][3]

ग-नी तीव्रौ तु केदार्यां रिधौ न स्तोऽथ गादिमा ॥

ग म प नी सा स नि प म गा सा । नि प नि स मा ग स नि स स ।
म ग म प नि प म ग म प म ग स नि स सा । इति केदारी । २७ ।

28

[ कामोदी ][4]

कामोदी तीव्रगोपेता गान्धारादिकमूर्च्छना ।
आरोहे म-नि-हीना स्यान्मधांशस्वरभूषिता ॥

ग प ध स स नि ध प ध स ध स रि म ग रि ग रि स स-
नि ध प ध ध सा । इति कामोदी । २८ ।

29

[ दीपकः ][5]

दीपको मालवोत्पन्नो मन्यारोहेऽत्र वर्जितौ ।
गान्धारोद्ग्राहसंयुक्तो न्यास( से )सांशगधैर्वृतः ॥

---

१. cf Verse 408 of सं. पा.
२. Bikaner Ms. Omits, स स......री. सा ।
३. cf Verse 409 of सं. पा.
४. cf Verse 410 of सं. पा.
५. cf Verse 412 of सं. पा.

ग प ध स ग रि स नि ध ध ध प म ग ग प म गा रि स रि सा-
रि स स स स ग प ध नि ध धा प म गा रि स स रि स रि ग पा म ग रि स
इति दीपकः [ २९ ]

30

[ देशाख्यः ][1]

रि-तीव्रतरयुक्तोऽसौ ग-तीव्रेणापि संयुतः ।
धगवर्जोऽवरोहे स्याद् गान्धारस्वरमूर्च्छनः ॥
ग प ध स स नि प म म म रि स । इति देशाख्यः । ३० ।

31

[ पटमञ्जरी ]

पञ्चमांशग्रहन्यासा मालवस्वरसम्भवा ।
अवरोहे ग-वर्जा स्यात्सादिका पटमञ्जरी ॥
स रि ग म प म पा म पा ग म पा गा रि स ।
स रि ग म प प प म ग म प ध नि ध प म प पा ग रि सा ।
स स स नि ध ग म प ध नि ध ध प ग म पा म गा रि सा ।
इति पटमञ्जरी । ३१ ।

32

[ वसन्तः ][2]

षड्जादिमूर्च्छने मान्ते ग-नी तीव्रौ वसन्तके ।
स रि ग म प ध स नि ध म प म ग मा ।
ग म प ध नि ध ध प म प म ग मा स स स रि ग म प ध नि स-
रि ग म म ग रि स नि ध प म प म ग मा । इति वसन्तः । ३२ ।

33

[ ललिता ][3]

या गौरीरागसम्भूता ललिता पञ्चमोज्झिता ।
सांशोद्ग्राहा तथा मान्ता गीतान्ते सा सुशोभना ॥

---

१. cf. Verse 371 of सं. पा.
२. cf. Verse 370 of सं. पा.
३. cf. Verse 413 of सं. पा.

सा रि ग म ध नि स स नि ध म ग रि स । नि ध नि स रि स-
नि स मा ग रि स । स रि ग म मा । धा म ग रि स नि ध नि स सा ।
इति ललिता । ३३ ।

## III

### 34

### [ कर्णाटी-कनडी ][१]

तीव्रगान्धारसम्पन्ना मध्यमोद्ग्राहधाङ्गता ।
सांशस्वरेण संयुक्ता कनडी सा ( कर्णाटी सा ) विराजते ॥
( संस्कृतेऽपि ) कर्णाटी कानडा कनडीति दशदेशभाषानाम प्रसिद्धम् ।

म प ध नि स रि ग म रि स नि ध प म । प ध नि स रि स नि
स नि ध । गा रि सा नि धा । रि स नि स नि सा नि ध । स नि ध-
नि ध प म (ग म प म)[२] ग रि स नि ध नि स सा । इति कानडी । ३४ ।

### 35

### [ बहुली ][३]

गौरीस्वरा धसाढ्या सा बहुली मध्यमोज्झिता ।
आरोहणे निहीनोक्ता गान्धारोद्ग्राहपांशका ॥

ग प ध स स नि ध प ग पा ग रि स । सा ग रि सा ध ध ध प ग-
प ग रि ग । प ग रि ग रि स । रि रि ग रि स रि स ध स ध म ध स-
रि ग प गा रि सा रि रि स ध ध स । इति बहुली । ३५ ।

### 36

### [ मुखारी ][४]

ऋषभः कोमलो यत्र गान्धारः पूर्वसंज्ञकः ।
मुखार्यां धैवतोद्ग्राहो निधौ पूर्वाख्यकोमलौ ॥

ध स रि म प नि ध म प म प ग ग ग रि स रि ध स रि मा ग रि ।
प म ग रि म ग रि ग रि स ध ध स । इति मुखारी । ३६ ।

---

१. cf Verse 384 of सं. पा.
२. Bikaner ms. inserts ग म प म.
३. cf Verse 414 of सं. पा.
४. cf Verse 373 of सं. पा.

37

[ गुर्जरी ][1]

गूर्जरी मालवोत्पन्नाऽवरोहे म-नि-वर्जिता ।
गश्लिष्टमध्यमोपेता धैवतश्लिष्टनिस्वरा ॥

[ दक्षिण-गुर्जरी ][2]

गान्धारमूर्च्छनोपेता दाक्षिणात्या प्रकीर्तिता ।
ग प ध स रि ग रि स ध नि ध प ग प ग मा गा रि स ।
ग प ध नि ध ध नि प ग प प ग सा गा री स ।
इति दक्षिणा गुर्जरी । ३७ ।

38

[ औत्तरा गुर्जरी ][3]

औत्तरा गुर्जरी ज्ञेया शुद्धगा पूर्ववत्सदा ।
इत्यौत्तरा गुर्जरी ॥ ३८ ॥

39

[ भूपाली ][4]

मनिवर्जा तु भूपाली रिधौ यत्र च कोमलौ ।
गान्धारोद्ग्राहसंयुक्ता रिन्यासा गांशशोभिता ॥
ग प ध स स रि रि ग रि स । ग ग ग रि रि ग ग रि स रि रि स
ध स । ग प ग ग ग रि स रि रि ग रि स रि रि स ।
इति भूपाली । ३९ ।

40

[ मल्लारः—मेघः ][5]

षड्जादिमूर्च्छनोपेतः षड्जत्रयसमन्वितः ।
गनिहीनोऽपि मल्हारो वर्षासु सुखदायकः ॥

---

१-२-३. cf Verse 415 of सं. पा.
४. cf Verse 375 of सं. पा.
५. cf Verse 360 of सं. पा.

यतो वर्षासु रागोऽयं मेघ इति प्रकीर्तितः ।
अकालरागगानेन जातदोषं हरत्ययम् ॥

[1]स रि म प ध स ध प म प म म रि स । ध स रि म प म म रि स ।
रि स रि म प ध स ध रि स ध स ध प म म म प म म रि स ।
इति मेघः । ४० ।

41

[ मल्लारी ][2]

गौरीमेलसमुद्भूता मल्हारी निस्वरोज्झिता ।
आरोहणे ग-हीना स्यात्षड्जादिस्वरसम्भवा ॥

स रि म प ध म प ध स ध रि स ध प म प म ग रि स ।
रि रि प म ग रि स । रि रि स ध॰ध स ध स रि मा ग रि स ( रि स )[3]
ध स स । इति मल्लारी । ४१ ।

42

[ सौराष्ट्री ]

गौरीमेलसमुद्भूता धैवतोद्ग्राहशोभिता ।
धन्यासांशापि सौराष्ट्री प्रायशः कम्पितस्वरा ॥

ध नि स रि ग म ग रि स नि ध ध नि स री स री नि नि सा नि धा ।
ध नि स रि ग मा नि ध ध प म प म ग म ग रि सा नि सा नि स रि-
नि स नि ध मा ग रि ग री सा नि ध नी सा । इति सौराष्ट्री । ४२ ।

43

[ देशकारी ][4]

देशकार्यां गनी तीव्रौ धांशो धादिकमूर्च्छना ।
ध नि स री स नी ध ध नि स रि ग मा गा रि स ।
री स नी ध । ध नि स रि स नि स नि ध ध नि सा ।
इति देशकारी ॥ ४३ ॥

---

१. Bikaner ms. inserts स रि.
२. cf Verse 368 of सं. पा.
३. Bikaner ms. inserts रि स.
४. cf Verse 372 of सं. पा.

44

[ रेवा ][1]

गौरीमेलसमुद्भूता षड्जोद्ग्राहेण मण्डिता ।
मनित्यक्ता सदा रेवा गपादिप[ य ]मलस्वरा ॥

स रि ग प ध स स ध प ग प गा रि ग रि स रि रि ग रि स रि रि-
स स ध स ध स ध स रि ग ग प ग प ग प रि रि ग रि रि ग रि-
स ध ध रि स ध ग रि ग प ग रि रि रि ग रि स ।
री सा धा पा ध सा री री गा री सा । रि रि रि स ध ध स सा ।
इति रेवा । ४४ ।

45

[ गौलः ][2]

गौलस्तु गधवर्जः स्यात् गौरीमेलसमुद्भवः ।

स रि म प नि स स नि प पा पा मा रि स । नि स रि म रि मा पा पा पा-
मा रि मा रि मा रि सा नि स नि स रि म रि म पा म नि प प नि प म-
प ध म रि मा रि मा रि म म नि स । रि रि पा म रि म रि स-
रि रि स नि स स सा । इति गौलः । ४५ ।

46

[ हिन्दोलः ][3]

हिन्दोलेऽथ रिपौ त्याज्यौ कोमलो धैवतो भवेत् ।

स ग मा धा नी सा नि ध नि ध म ग स स ग म ध ध नि स मा ग स ।
नि ध नि स नि ध नि ध म ध नि स ध नि ध नि स मा ग स-
नि ध नि ध म ग स । इति हिन्दोलः । ४६ ।

---

१. cf Verse 418 of सं. पा.

२. cf Verse 419 of सं. पा.

३. cf Verse 430 of सं. पा.

47

[ देशी ][1]

गनी त्याज्यावथारोहे रिधावत्र च कोमलौ ।
षड्जादिस्वरसम्भूतिर्देश्यामंशस्तु रिः स्मृतः ॥
स रि म प ध स नि नि ध म पा ग गा रि स रि म प नि ध म पा-
धा सा रि ग रि स रि स नि ध प म पा ग रि स रि सा ।
ग रि सा । ग रि स नि ध प म प ध नि ध म ध म पा गा रि स ।
इति देशी । [ ४७ ]

48

[ टक्कः ][2]

रि-धौ तु कोमलौ ज्ञेयावाभीरीमूर्च्छनायुते ।
[3]अवरोहे म-वर्जः स्याद्रागे टक्काभिधानके ॥
स रि ग म प ध स प गा रि स नि धा प ध धा ध प
म म पा म गा रि सा । नि स रि नि स नि स नि धा प प ध ध-
प म म पा म पा प गा रि सा प नि स ग रि ग म गा रि स नि-
स रि स रि नि स नि स नि धा प ग म प म प मा रि स ।
प गा रि स नि स रि नि स नि धा प प स सा । प गा रि स ।
इति टक्कः ॥ [ ४८ ]

49

[ नाटः ][4]

रिस्तु तीव्रतरो यस्मिन् गान्धारस्तीव्रसंज्ञकः ।
धस्तु तीव्रतरः प्रोक्तो निषादस्तीव्रनामकः ॥
अवरोहे धगौ न स्तो नाटो रि-स्वरमूर्च्छनः ।

१. cf Verse 429 of सं. पा.
२. cf ,, 432 of सं. पा.
३. cf ,, 432 of सं. पा. where instead of "अवरोहे मवर्जः" we find आरोहे च ध-वर्जत्वं ।
४. cf Verse 433 of सं. पा.

रि ग म प ध नि स स नि प म म प म म रि स ।
रि ग म प म म प म प म म म रि स । सा री ग म ध नि स स-
नि प नि प नी नी स स म म प प म मा री स ।
रि स स नि प । स स नि प रि प नि प । म म प म म रि स ।
इति नाटः । ४९ ।

## 50

## [ सावरी-सोवेरी ][1]

गौरीमेलसमुत्पन्नारोहणे ग-नि-वर्जिता ।
मध्यमोद्ग्राहधांशाद्या सावरी न्यासपञ्चमा ॥

म प धा स रि ग रि स नि ध प म प म ग रि स ।
सा रि म प ध ध नि ध ध प म प मा ग रि ग रि ग रि स ।
रि म प ध ध प म प प रि रि रि मा ग रि ग रि स ।
ध स रि म प ध ध स रि ग रि स रि स ध री नि ध ध प-
म पा मा ग रि रि रि मा ग रि ग रि रि स ध स सा ।
इति सोवरी । ५० ।

## 51

## [ सावेरी ][2]

सावेरी तीव्रगान्धारा धैवतोद्ग्राहसम्भवा ।
मांशाप्यन्यवरोहा सा आरोहे ग-नि-वर्जिता ॥

ध स रि म मा ग रि स रि सा ध । ध स रि म मा प ध ध प मा-
ग रि स रि ग रि सा ध । ध स रि म मा प ध ध प ध ध स रि-
स ध स ध प म प गा ग रि । स रि ग रि रि स सा धा ।
ध रि रि स ध स सा । इति सावेरी । ५१ ।

---

१. cf Verse 433 of सं. पा.

२. cf Verse 443 of सं. पा. which reads मध्यमांशा निहीना चारोहणे for मांशाप्यन्यवरोहा सा आरोहे.

52

[ सालङ्गः ][1]

गान्धारोद्ग्राहसालङ्गे रिगौ कोमलतीव्रकौ ।

ग म प ध ध नि प म प म ग म ग रि स नि ध ।
रि रि ग ग प म गा रि स रि स स ।
प प ध नी ध प म प प म ग म रि रि ग ग प मा गा-
रि स रि स सा । इति सालङ्गः । ५२ ।

53

[ भैरवः ][2]

भैरवे तु रिपौ नस्तौ धैवतादिकमूर्च्छने ।
तत्रोक्तौ गनी तु ( तु गनी ) तीव्रौ कोमलो धैवतः स्मृतः ॥

ध नि स ग म ध नि स नि ध नि ध म ग म ग स नि ध नि-
स मा ग स नि ध नि सा नि ध नी धा म गा मा गा गा
स नि ध नि स सा । इति भैरवः । ५३ ।

54

[ श्रीः ][3]

रित्रयोद्ग्राहसंयुक्तः षड्जोद्ग्राहोऽथवा मतः ।
श्रीरागस्तीव्रगान्धार आरोहे ग-धवर्जितः ॥

रि रि रि प म ग रि स । नि स रि नि स नि नि नि ध प ।
म प ध म प म म मा ग रि । रि रि रि प मा ग रि ग रि सा
नि स नि स नि स नि ध प । प प नि नि स नि नि-
स नि नि स सा । म मा ग रि रि रि ग रि स नि नि स स ।
इति श्रीरागः । ५४ ।

१. cf Verse 444 of सं. पा.
२. cf ,, 378 of सं. पा.
३. cf ,, 445 of सं. पा.

55

[ नारायणी ][१]

नारायण्यां गनी तीव्रौ गान्धारादिकमूर्च्छना ।
आरोहे मनि-वर्ज्या स्यान् न्यासांशधैवता स्मृता ॥

ग प ध ध स स नि ध प म म म ग रि । स रि ग स रि स स-
नि ध । ध रि स स स नि धा ध स स्स नि ध ।
ध स स रि पा म ग रि म ग रि म ग रि । स रि ग स रि स स-
स़ नि ध प ध स सा । इति नारायणी । ५५ ।

56

[ पहाडी ][२]

गौर्युत्पन्ना पहाडी स्यादवरोहे ग-वर्जिता ।
उद्ग्राहे षड्जसम्पन्ना न्यासांशपरिशोभिता ॥

सा रि म प ध प ध ध प म प प म रि नी सा ।
रि प प म रि स नी सा । इति पहाडी । ५६ ।

57

[ विहङ्गडः ][३]

विहङ्गडे गनी तीव्रावारोहे तु रि-वर्जिते ।
गान्धारोद्ग्राहसम्पन्ने न्यासांशो नि[ रि ]स्वरो मतः ॥

स ग म प नि स स नि प म ग म प म गा रि स नि स ।
प नि स रि मा गा रि स नि स रि नि सा नि पा नी सा सा ।
इति विहङ्गडः । ५७ ।

58

[ पूर्वा ][४]

गौरीमेलसमुत्पन्ना षड्जोद्ग्राहसमन्विता ।
न्यासांश-ग-स्वरोपेता पूर्वा सा सुखदायिनी ॥

---

१. cf Verse 382 of सं. पा.
२. cf ,, 496 of सं. पा.
३. cf ,, 447 of सं. पा.
४. cf ,, 451 of सं. पा.

स रि ग म प ध नि स नि ध प ध प म ग ग म प म ग रि ग प-
म ग रि स। ध प ध म ग म प म ग रि ग ग म प म गा रि सा।
सा रि स स स रि स रि ग ग ग म प म ग रि ग रि सा।
इति पूर्वा [ ५८ ]

59

[ सामन्तः ][1]

रिस्तु तीव्रतरः प्रोक्तस्तीव्रगान्धारशोभिते।
सामन्तसंज्ञके रागे न्यासोद्ग्राहांशषड्जके॥

स रि ग म प ध नि स स नि ध प म ग म प म ग रि स।
स स रि ग म प म म प म म प म म ग रि स।
स रि ग म प ध नि ध प म प म॰म प म म म ग रि सा नि स।
इति सामन्तः। ५९।

60

[ नटनारायणः ][2]

वेलावलीसमुद्भूतो मांशो रिन्यासको नटः।
अवरोहे गहीनः स्याद् गान्धारादिकमूर्च्छनः॥

ग म प धा नि स स नि ध ष म ग म प म म म रि स रि ग म प ध-
प ध प म ग म प म म रि स। स नि ध प म ग म प म म म री सा
इति नटनारायणः। ६०।

61

[ केदार गौलः ][3]

केदारगौलः श्रीरागात्सम्भूतोद्ग्राहनिस्वरः।
रिन्यासांश-सपैर्युक्त आरोहे गधवर्जितः॥

नि स रि म म प प नि नि स नि ध प म प धा ध प मा ग ग रि।
[4]( नि स रि म म प नि ध धा प मा ग गा रि १

---

१. cf Verse 449
२. cf ,, 434
३. cf ,, s 420 & 421 of सं. पा.
४. Acc. to Bikaner ms.

नि स रि म म प सा नि ध धा प मा ग गा रि ।)
नि स रि प म ग॑ रि ग रि स । इति केदारगौलः । ६१ ।

62

[ कर्णाट-गौलः—कान्हडगौलः ][1]

कर्णाटगौलः सामन्तजन्यो रि-स्वरमूर्च्छनः ।
वर्जितोऽथ धगाभ्यां स तथारोहावरोहयोः ॥
न्यासांशगम-संयुक्तोऽवरोहे पञ्चमोज्झितः ॥
रि ग म प प नि नि स री स नि नि नि नी धा मा प नि नि-
स री स नि नि सा म म म ग म म ग रि ग म प प नि नि री स-
नि नी स सा । इति कान्हड-गौलः । । ६२ ।

63

[ रीतिगौलः ][2]

रीतिगौलस्तु सम्पूर्णो धैवतादिकमूर्च्छनः ।
अवरोहे प-वर्जः स्यान् न्यासांशसरिभूषितः ॥
ध नि स रि ग म प ध नि नि ध म प म ग रि ।
स रि ग म प म ग रि स म ग ग रि रि स ।
ध नि स रि गा ग रि स रि रि स । ध नि स ध नि स प म ग रि स नि-
ध प ग रि स । स रि रि ग ग रि स । ध नि स रि रि स ।
इति रीति-गौलः । ६३ ।

64

[ नारायणगौलः ][3]

अथ नारायणे गौले श्रीरागस्वरसम्भवे ।
अवरोहे गधौ नस्तो निर्यन्यान्यत ( निर्योरन्यत )रादिमे ।
पुनः स्वस्थानगमकपरिभ्यां च सुशोभिते ।
हतोत्तराहतोपेते मध्यमन्यासमण्डिते ॥

---

१. cf Verse 422-23 of सं. पा.
२. cf ,, 425 of सं. पा.
३. cf ,, 426-27 of सं. पा.

नि स रि म प नि स नि प प ध प म प म रि ग रि स।
नि स रि मा रि ग रि स प ध प म प म रि ग रि स रि स।
नि स रि म रि ग रि स। स नि नि ध ध प प म ध प प म म-
ग गा रि रि स नि स रि ग रि स नि स सा।
इति नारायणगौळः। ६४।

64 A

[ माळव-गौडः ][1]

अथ माळवगौडेऽस्मिन् गौरीस्वरसमुद्भवे।
त्यक्तधे रिस्वरोद्ग्राहे न्यारोहे तु गः स्वरः।
आरोहे यदि गान्धारो मध्यमावधिमूर्च्छना।
अवरोहेऽपि गान्धारः पादिर्मान्तो विधीयते॥

[2]रि म प नि स स नि प प म म म रि ग म रि स रि म प नि स रि-
मा रि ग मा रि सा स नि प म ग म रि ग रि सा।
इति माळवगौळः। ६४ ए।

65

[ पञ्चमः ][3]

पञ्चमो परिहीनः स्यात्तीव्रगः सादिमःस्मृतः।
मध्यमन्याससंयुक्तो मध्यमांशेन संयुतः॥

स ग म ध नि स स नि ध म ग स ग मा। ध ध नि ध नि स मा ग स नि
ध नि ध म स ग मा ग मा ग स। नि ध नि स सा।
इति पञ्चमः। ६५।

---

१. cf Verse 428 of सं. पा.

२. Bikaner ms. reads. :
रि प प नि स स नि प म ग म रि ग म रि सा नि प
म प म ग म नि प म प ग म रि ग म रि सा।
रि स स रि स स नि प। स स रि प म ग म रि ग म
रि स नि स सा।

३. cf ,, 369 of सं. पा.

66

[ विभासः ][१]

मस्तु तीव्रतरः प्रोक्तो गनी तीव्रौ रिधौ मतौ ।
कोमलौ न्यासधोपेते विभासे गादिमूर्च्छने ॥
आरोहे म-नि-वर्जेऽस्मिन् गपांशस्वरसंयुते ।

ग प ध स रि ग रि स स नि नि ध ध स नि ध प म प ग-
ग रि ग रि सा । ध ध प मा पा मा गा ग रि रि स ।
स रि स रि ग प म प प म ग रि ग रि सा स स
स स स स रि गा रि स नि ध धा स रि ग पा म प म प-
म प ग प म ग गा रि स । इति विभासः । ६६ ।

67

[ मङ्गल-कौशिकः ][२]

धैवतोद्ग्राहधांशाद्यो गौरीमेल-समुद्भवः ।
रागो मङ्गलकौशाख्यो धनी यत्र समन्वितौ ॥

ध नि स रि ग म प ध नि ध ध प म प म ग म ग रि स रि स नि स नि ध ।
ध नि स रि स नि स नि ध । ध नि स रि मा ग रि स नि स रि-
नि स नि स नि ध । ध नी स सा । ध ध नि ध प नि ध नि-
ध नि स स । ध नि सा रि मा ग रि स नि ध नि सं सा ।
इति मङ्गलकौशिकः । ६७ ।

68

[ नादरामक्रिया ][३]

नादरामक्रिया गौरीमेलोत्पन्ना म-भूषिता ।
षड्जोद्ग्राहा च नि-न्यासारोहे गान्धारवर्जिता ॥

स स स रि म म ग म प ध नि ध ध म प म ग मा ।
स स सा रि म मा प धा प मा ग रि स नि ।

---

१. cf Verse 383 of सं. पा.
२. cf ,, 452 of सं. पा.
३. cf ,, 453 of ,,

स रि ग ग ग ग ग रि स । स रि म म प ध नि ध नि स स
नि स रि नि स नि स नि स सा । इति नादरामक्रिया । ६८ ।

69

[ शङ्कराभरणः ][1]

शङ्कराभरणे प्रोक्तौ गनी तीव्रौ तु सादिमे ।

स रि ग म प ध नि सा स नि ध प म ग म प म ग रि स ।
स नि ध प ध नि स ध नि स ध नि स । ध नि स रि
ग म ग रि स नि स नि ध नि स । स नि ध प ध नि स ।
रि ग म पा धा पा मा गा मा स रि ग म प ग म ग रि ग म गा रि स ।[2]
स नि ध नि स । री नि स ध नि स सा ।
इति शङ्कराभरणरागः । ६९ ।

70

[ सालङ्गनाटः ][3]

शङ्कराभरणोत्पन्ने गान्धारस्वरवर्जिते ।
अथ सालङ्गनाटेऽस्मिन् सन्पन्योन्पमनन्वितौ [ सन्यासांशसमन्विते ] ॥
षड्जोद्ग्राहेण सम्पन्ने मधावाम्रेडितौ स्मृतौ ।

स स रि म म प ध नी ध प म प प मा री सा ध प म प ध
स स रि रि म म प । सा ध प म म म री सा ध प ध स रि स ।
सा ध ध प म म प मं म म री सा । ध प ध स स रि सा ।
इति सालङ्गनाटः । ७० ।

71

[ गौडः ][4]

तीव्रगान्धारसंयुक्त आरोहे वर्जितौ गनी ।
षड्जोद्ग्राहेण सम्पन्ने गौण्ड आम्रेडितस्वरैः ॥

१. cf Verse 406 of सं. पा.
२. Bikaner ms. inserts :—स स रि ग म रि ग रि ग स नि नि स ।
३. cf Verse 435 of सं पा.
४. cf ,, 456 of ,,

सा रि म म प ध सा नि ध ध प म प मा ग रि रि रि ग रि रि स ।
ध स रि म म प ध नि ध प म प मा ग ग रि ।
स रि ग रि स ।[१] इति गौडरागः । ७१ ।

72

[ देवगिरिः ][२]

अवरोहे गधौ नस्तो धस्तु तीव्रतरो भवेत् ।
देवगिरौ गनी( गनी देवगिरौ )तीव्रौ यत्र स्यात् षड्जमूर्च्छना ॥
स रि गा म प ध नि स स नि प म री स । स स रि ग म प
ध प म प म म री सः । स रि ग म प म रि स नि स नि स स
नि ग म प ध प म प म प म ध प म म री स । स रि स रि नी सा ।
इति देवगिरिः । ७२ ।

73

[ देवगान्धारी ][३]

तदा तु देवगान्धारी पूर्णश्चेद् भैरवो यदा ।
ध नि स रि ग म प धा प म ग रि सा नि ध ध नि स री स नि ध ।
ध नि स रि ग मा गा री स नी धा ध नि नी सा ।
इति देवगान्धारी । ७३ ।

74

[ छायानाटः ][४]

छायानाटस्तु विज्ञेयः शंकराभरणस्वरैः ।
आरोहणे नि-वर्जः स्यादवरोहे ग-वर्जितः ।
धैवतोद्ग्राहसंयुक्तो रि-न्यासोऽनेकमध्यमः ॥
ध स स रि ग म प ध स स नि ध प म म रि । स रि ग म पा म म रि ।

---

१. Bikaner ms. adds :—
स स रि म म प ध ध स नि ध ध प प म म ग रि स रि ग रि सा ।
२. cf Verse 457 of सं. पा.
३. cf ,, 458 of ,,
४. cf ,, 436 of ,,

धा पा म म मा रि ध नी ध प म म मा रि स। स रि म म रि
सा स रि ग म प ध प म म म रि स स री म म री री। स रि ग म
पा म म मा री सा। इति छायानाटः। ७४।

75

[ आभीरीनाटः ][१]

आभीरीमेलसम्भूतोऽवरोहे धस्वरोज्झितः।
अपन्यासविशेषाढ्यः आभीरीनाटकः स्मृतः॥

स रि ग म प ध नि स स नि प ध प म म प म गा रि सा।
नी ३ स स सा। नि स रि ग म प पा पा म ग रि स नी स स सा।
स स प प स स। स स नि नि प मं म प गा रि स।
स स पा गा रि स रि स नी ३ सं स।
इति आभीरीनाटः। ७५।

76

[ कल्याणनाटः ][२]

कल्याणमेलसम्भूतोऽवरोहे धग-वर्जितः।
षड्जादिमूर्च्छनोपेतो रागः कल्याणनाटकः॥

स रि ग म प ध नि स स नि प म म प म री ग मा रि स।
स रि ग म पा म म म री स। स स स रि ग म पा ध प म म प म
म री ग मा री सा प प मा री सा। इति कल्याणनाटः। ७६।

77

[ शुद्धवराली ][३]

अथ शुद्धवराल्यां तु रि-गौ कोमलपूर्वकौ।
[४]मस्तु तीव्रतरो धः स्यात् कोमलो तीव्रनिस्वरः॥
धैवतोद्ग्राहयुक्तायां निमौ न्यासांशकौ स्मृतौ।

१. cf Verse 438 of सं. पा.

२. cf ,, 439 of ,,

३-४. cf Verse 391 of सं. पा. which reads गस्तु for मस्तु and वराटी for वराली।

ध ध नी सा रि ग म प म ग रि स नी ध ध नी स ।
धा पा मा पा म ग रि ग ग ग रि रि ग रि नी ध ध नी स नी नी
स नी स नी स नी स ध प म प म प म प म ग रि ग ग ग रि रि स
नी स सा । इति शुद्धवराली । ७७ ।

78

[ त्रिवणी ][1]

गौरीमेलसमुत्पन्ना त्रिवणी मस्वरोज्झिता ।
अवरोहणवेलायां षड्जोद्ग्राहांशरिस्वरा ॥

स रि ग म प ध नि स स नि ध प ग रि ग रि सा । स रि ग म
प ग रि ग रि स नी स रि ग म प ग रि स । ध प म प ग रि स
ध प गा री सा । इति त्रिवणी । ७८ ।

79

[ तोडी वराली ][2]

रिधौ च कोमलौ प्रोक्तौ यत्र तीव्रतरश्च मः ।
उद्ग्राहकौ [3]गधौ स्यातां वराली तोडिका च सा ॥

ध ध नि स ग म प ध ध प म ग म प म ग ग रि स
नि नि ध ध नि स । ग ग ग ग ग म प म ग म गा रि
स नि स रि नि स नि स नि ध ध नि स रि ग ग ग रि
स स स रि गा रि स स रि ग रि स ध नि स रि ग म
ग रि रि ग रि स ध नी स सा । इति तोडी वराटिका । ७९ ।

80

[ नागवराली ][4]

अथ नागवराल्यां तु मस्तु तीव्रतरो भवेत् ।
कोमलो धैवतः प्रोक्तो गधावुद्ग्राहकौ स्मृतौ ॥

---

१. cf Verse 459 of सं. पा.
२-३. cf Verse 392 of सं. पा. which reads पधौ for गधौ ।
४. cf Verse 393 of सं. पा.

ग म प ध नि स स नि ध ध नि स रि ग म ग रि नि स रि
स नि स नि धं। ध नि ध ध प म प म प ग म प ध ध
प म प म ग रि ग रि स नि स नि ध ध नि स सा।
इति नागवराली। ८०।

81

[ पुन्नागवराली ][१]

पुन्नागाख्यवराल्यां तु निषादस्तीव्रसंज्ञकः।
मस्तु तीव्रतरः प्रोक्तो गधावुद्ग्राहकौ स्मृतौ ॥
ग म प ध नि ध नि सा ग रि स नि स रि नि स नि ध।
ध नि स रि ग म ग ग म प धा प ध नी ध नी सा नी।
ध प म प ध म प ग म प ध म प ग म ग रि सा नी ध नी सा।
इति पुन्नागवराली। ८१।

82

[ प्रतापवराली ][२]

मतीव्रतरसंयुक्ता प्रतापोपपदान्विता।
वाराली च निना युक्ता तीव्रसंज्ञेन गादिका ॥
ग म प ध नि स सा नि ध प म प ग म ध म प ग म गा रि स।
ग ग म प ग म गा रि स सा स गा रि स नि स रि नि स नि ध प
ध म प ग म प ध म प ग म ग रि स ग म प ध नि ध प म ग
म ग रि ग ग रि स ध ध नी सा। इति प्रतापवराली। ८२।

83

[ कल्याणवराली ][३]

कल्याणोपपदाद्या सा वराली गादिमूर्च्छना।
कल्याणमेलसम्भूता मपांशन्यासका स्मृता ॥

---

१. cf ,, 394 of सं. पा.
२. cf ,, 395 of सं. पा.
३. cf ,, 397 of सं. पा.

ग म प ध नि स रि स ग रि स नि नि ध ध ध नि सा नी
धा पा म प । ग म प ध प म गं म ग रिं स ।
नी स गा मा पा ध पा ध म गा मा पा ग म ग रि स ध नि स रि ग
म गा रि स नि ध ध नी स सा । इति कल्याणवराली । ८३ ।

84

[ कुरङ्गः ][1]

रिस्तु तीव्रतरः प्रोक्तो मस्तु तीव्रतरो भवेत् ।
अतितीव्रतमो गः स्यान्निस्तीव्रः स्यात्कुरङ्गके ।
षड्जोद्ग्राहेण सम्पन्ने न्यासांशौ षड्जपञ्चमौ ॥

स रि ग म प ध नि सं । स नि ध प म पा म प म ग म ग रि सा ।
स रि ग म प ध प म प प म ग म ग म ग रि स । स रि ग म प म
प प म ग म प म ग रि स नि स पा ग मा पा ग म गा रि स ।
नी स नी स रि ग म प ग म ग रि स स रि ग म प म गं रि स नी
स नी स सा । प म ग रि स । स स रि ग म ग रि स नी स सा ।
इति कुरङ्गः । ८४ ।

85

[ सौदामिनी ][2]

रिधौ तु कोमलौ स्यातावतितीव्रतमश्चगः ।
मश्च तीव्रतरो यत्र निषादस्तीव्रसंज्ञकः ॥
सौदामिन्यां तु गान्धारः स्वरोद्ग्राहः सतां मतः ।

ग म प ध नि स रि स नि ध प म ग म प म ग म ग रि स ।
रि स नि ध ध नि स रि ग म प म ग रि स नि स । स रि ग म प ध
प म प मं ग रि स रि स स रि स नि स रि ग म प प म म ग
ग म ग री सा नी स सा । इति सौदामिनी । ८५ ।

१. cf Verse 460 of सं. पा.
२. cf ,, 461 of सं. पा.

86

[ वैजयन्ती ][१]

विकृतो मध्यमो यत्र धैवतः कोमलो भवेत् ।
निषादस्तीव्रनामासौ वैजयन्ती रिपूर्विका ॥
आरोहणेऽवरोहे च कदाचित्कौ गधौ मतौ ।

रि म प नि स स नि प म प म ग ग रि ग रि स ।
नि स रि म रि ग रि ग रि स नि स रि पा रि ग रि स नि स री
नि स नि प नी स स सा पा रि रि ग रि रि पा रि ग रि स नि
स स नि प प नि स सा । इति वैजयन्ती । ८६ ।

87

[ हंसः ][२]

गनिभ्यां वर्जितो हंसो रिधकोमलसंयुतः ।
सा रि म प ध ध स सा ध प मा रि रि म प प म रि रि म रि स
रि स ध स सा । इति हंसः । ८७ ।

88

[ कोकिलः ][३]

कल्याणमेलसम्भूतो रागः कोकिलसंज्ञकः ।
सर्वदा म-नि-हीनः स्याद् गान्धारादिकमूर्च्छनः ॥
ग प ध स स ध प ग प गा रि रि ग रि स स रि स ध-
स ध प ग प ध स स । इति कोकिलः । ८८ ।

89

[ सुरालयः ][४]

गौरीमेलसमुद्भूतो धैवतस्वरवर्जितः ।
आरोहणे रि-हीनः स्यान्निषादादिः सुरालयः ॥

---

१. cf Verse 462 of सं. पा.
२. cf Verse 463 of सं. पा.
३. cf Verse 464 of सं. पा.
४. cf Verse 466 of सं. पा.

नि स ग म प नि स स नि प म ग म प म ग रि स नि
स नि प नी स सा गा म प नि प म ग रि स नि स प
नि स ग स नि स नि प नी स सा । इति सुरालयः । ८९ ।

९०

[ अर्जुनः ][१]

गौरीमेलसमुद्भूतो आरोहे म-नि-वर्जितः ।
गधहीनोऽवरोहे स्याद् गादिरर्जुनसंज्ञकः ॥

ग प धा स स नि प प म रि स ध स ध स रि ग प म रि स
ध स रि ग रि ग प प ध प ध स स नि प नि स नि प
नि प म ग प म रि स रिं स ध स सा । इत्यर्जुनः । ९० ।

९१

[ ऐरावतः ][२]

कल्याणमेलसम्भूतो धहीनः पञ्चमांशकः ।
ऐरावतो ग-पूर्वोक्तो न्यासषड्जविभूषितः ॥

ग म प नि स नि प म ग म प ग म प ग म प ग म ग रि स
नि प नि स ग म प म ग रि नि प नि स रि स नि स सा ।
इत्यैरावतः । ९१ ।

९२

[ कङ्कणः ][३]

शङ्कराभरणे मेले रागः कङ्कणसंज्ञकः ।
पहीनो गादिराख्यातो बहुमध्यमसंयुतः ॥

ग म ध न्नि स स नि ध म ग म म । स रि ग म म ।
धा म ग म मा ग म ग रि स नि स नि स ध नि स रि ग म

---

१. cf Verse 467 of सं. पा.
२. cf Verse 468 of सं. पा.
३. cf Verse 469 of सं. पा.

ध नि स स रि स ग रि स म ग रि स नि स ध नि
स नि ध मा ग मा गा रि स नि ध नी स सा ।
इति कङ्कणः । ९२ ।

93

[ रत्नावली ][१]

रत्नावल्यां रिनी नस्तस्तीव्रतीव्रतरौ गमौ ।
गान्धारमूर्च्छना यत्र तत्रोक्तो न्यासपञ्चमः ॥

ग म प ध स स ग स ध प म प ग मा पा ।
ग मा ग स स ग म प धा प मा प ग म पा ग मा गा-
स ग म प ध प म प पा । इति रत्नावली । ९३ ।

94

[ कल्पतरुः ][२]

धहीनः कल्पतर्वाख्यस्तीव्रतीव्रतरौ गरी ।
ऋषभोद्ग्राहसंयुक्तः षड्जन्याससमन्वितः ॥

रि ग म प नि स स नि प म ग रि स नि स स रि स रि स ।
स रि ग म म प नि प प नि प म म प मं प ग रि ग म पा म
म पा म म ग री सा । इति कल्पतरुः । ९४ ।

95

[ सोरठी ][३]

श्रीरागमेलसम्भूता सोरठी रिस्वरोद्ग्रहा ।
पञ्चमाद्धुम्फितोपेता रिपर्यन्तं पुनस्तथा ।
हुम्फिता च सपर्यन्तमग्रस्वरस्थानषड्जका ।
तथैव पञ्चमोपेता रिस्वराच्च्यावितोदिता ॥

रि म पा री स रि सा नी धा प ध प मा गा री ३ स ।

१. cf Verse 470 of सं. पा.
२. cf Verse 471 of सं. पा.
३. cf Verse 472-3 of सं. पा.

सा रि म पा सा ३ नी ध प ध पा मा ग री ३ स ।
रि म पा नी ध प ध पा मा ग री ३ स । इति सोरठी । ९५ ।

96

[ मारुः ][१]

शुद्धस्वरसमुद्भूतो गान्धारोद्ग्राहसंयुतः ।
आरोहे त्यक्त-धो ज्ञेयो गान्धाराच्च्यवितोदितः ।
अग्रस्वस्थानसंयुक्तः पुनः स्वस्थानसंयुतः ।
आन्दोलितनिषादाद्यो मारुर्धान्दोलितो मुहुः ॥

ग म प नी नि धा ध पा म ग म ग रि स ग म प नी सा स रि स
नि स नि प ध पा म ग म प नी नि ध ध पा म ग म प म ग रि स
इति मारुः । ९६ ।

97

[ कुमुदः ]

नाटमेलसमुद्भूतो रागः कुमुदसंज्ञकः ।
आरोहणे म-वर्जोक्तो गान्धारोद्ग्राहशोभितः ॥

ग प ध नि सा रि सा नि ध प म ग रि ग म ग रि री सा
सा रि ग पा ध प ग पा ग पा म ग ग रि रि स नी
स रि ग रि स नी स स । इति कुमुदः । ९७ ।

97 A

[ चक्रधरः ][२]

नाटमेलसमुद्भूतो रागश्चक्रधरः स्मृतः ।
पञ्चमेन विहीनः स्यात् षड्जोद्ग्राहेण शोभितः ॥

स रि ग म ध नि स स नि ध म ग म ग म ग रि ग रि स
स रि ग म म ग रि स । स रि ग म ध नि ध नि स रि स
स रि स नि स नि ध ध नि स ध नि स नि ध म गा मा ग रि स ।
इति चक्रधरः । ९७ ए ।

१. cf Verse 474-5 of सं. पा.
२. cf Verse 477 of सं. पा.

98

[ सिंहरवः ][1]

भैरवीमेलसम्भूतो गान्धारेण विवर्जितः ।
आरोहे तु नि-वर्जः स्यान्मादिः सिंहरवः स्मृतः ॥

म प ध स रि म रि स नि ध प ध स नि ध प ध म प
म रि म रि स ध स रि स रि म म प ध स नि धा पा
म रि म रि स ध स स । इति सिंहरवः । ९८ ।

99

[ मञ्जुघोषा ][2]

श्रीरागमेलसम्भूता गस्वरेण विवर्जिता ।
मञ्जुघोषा धपूर्वा स्यादारोहे त्यक्तनिस्वरा ॥

ध स रि म प ध स नी ध ध प म म पा म म रि सा ध स रि
म रि म पा धा ध प म पा म रि स ध रि म पा म रि स नी ध सा
इति मञ्जुघोषा । ९९ ।

100

[ शिववल्लभा ][3]

मुखारीमेलसम्भूता महीना शिववल्लभा ।
न्यभावोद्ग्राहगान्धारा गपांशन्यासशोभिता ॥

ग प ध स नि ध प ध प ग प ध स नि ध प ध प ग प ग
रि ग रि स सा रि ग प ग रि ग रि स नी ध ध स रि ग
पा गा रि ग गा रि सा नी धा सा । इति शिववल्लभा । १०० ।

101

[ मनोहरः ][4]

शुद्धमेलसमुद्भूतः षड्जादिः स मनोहरः ।
आरोहे रिगमैस्त्यक्त आन्दोलितपसान्वितः ॥

१. cf Verse 478 of सं. पा.
२. cf ,, 479 of सं. पा.
३. cf ,, 480 of सं. पा.
४. cf ,, 481-82 of सं. पा.

धैवतं प्राप्य तस्माच्च म [सन्] निवृत्तोऽत्र कम्पितः ।
पञ्चमात् षड्जमासाद्य निवृत्तो मध्यमं प्रति ।
पुनर्निषादमासाद्य निवृत्तो मध्यमं प्रति ।
तत्राप्यान्दोलितो गे च रौ च संस्थितिशोभितः ॥

स स पा प ध प मा प ध नि स नि ध प मा प ध नि ध प-
मा ग रि स । इति मनोहरः । १०१ ।

इति रागलक्षणानि ॥

---

## [(८) अथ श्रुतिनिर्णयः]

श्रुतेर्विषयतां प्राप्त उपेक्षानर्हतां यदि ।
याति तत्र प्रसङ्गाख्या संगतिः शास्त्रसम्मता ॥
तत्संगत्या कृतान्यत्र रागाणां लक्षणानि वै ।
क्रमव्यत्ययपताऽतोऽत्र न दोषाय भवेदिह ॥
मध्यस्थाष्टश्रुतिप्रोक्तौ सपावुत्तरपश्चिमौ ।
सपौ पूर्वोत्तरौ ज्ञेयौ मध्यस्थद्वादशश्रुती ॥
पूर्वोत्तरौ मसौ ज्ञेयौ मध्यस्थद्वादशश्रुती ।
कोमलाख्यौ रिधौ स्यातां मध्यस्थद्वादशश्रुती ॥
तथा शुद्धौ रिधौ प्रोक्तौ मध्यस्थद्वादशश्रुती ।
गनी शुद्धाभिधौ तौस्तो मध्यस्थद्वादशश्रुती ॥
तीव्रौ गनी च विज्ञेयौ मध्यस्थद्वादशश्रुती ।
मतीव्रतरसंज्ञस्य कोमलस्यर्षभस्य च ॥
द्वादशश्रुतयो मध्ये ज्ञेया लक्ष्मविचक्षणैः ।
श्रुत्येकादशकौ मध्ये ज्ञेयौ पञ्चमरिस्वरौ ॥
कोमलाभिधधस्यापि शुद्धगान्धारसंज्ञिनः ।
श्रुतीरेकादशैवाहुर्मध्ये लक्षणकोविदाः ॥

शुद्धतीव्रौ धगौ ज्ञेयौ मध्यस्थैकादशश्रुती ।
निषादमध्यमौ ज्ञेयौ मध्यस्थद्वादशश्रुती ॥
त्रयोदशश्रुती मध्ये तीव्र-तीव्रतरौ निमौ ।
समासश्रुतिकानां च शुद्धानां च परस्परम् ॥
समानश्रुतिकानां च विकृतानां परस्परम् ।
द्वादशश्रुतिभिर्मध्ये व्यवधानं भवेदिति ॥
उक्तशेषस्वरात्सर्वान् मध्यस्थाष्टश्रुतीर्जगुः ।
समानश्रुतीकांश्छुद्धान्विकृतांश्चापि कोविदाः ॥
सप्तभिर्नवभिर्वापि श्रुतिभिः प्राप्तमध्यकान् ।
विषमश्रुतिकान् शुद्धान् विकृतान् कोविदा जगुः ॥
मध्यमे मेरुसंस्थेऽस्मिन् मध्यमग्रामसम्भवः ।
यदा तदैव तास्तिस्रः श्रुतीर्याति स पञ्चमः ॥
निषादं त्रिश्रुतिं तत्र ब्रूयुर्लक्षणकोविदाः ।
अन्ये तु श्रुतिभिर्युक्ताः सग्रामस्थस्वरा इव ॥
रिमैकैकश्रुतिं प्राप्य यदा गो मेरुगो भवेत् ।
गान्धारग्राम आख्यातस्तिसृभिः श्रुतिभिः परैः ॥
मधपास्तत्र युक्ताः स्युः षड्जोपि तिसृभिर्युतः ।
चतुःश्रुतिर्निषादोऽतो हृतश्रुतिधसौ यतः ॥
ऋषभो द्विश्रुतिर्ज्ञेयो गान्धारेण हृतश्रुतिः ।
गान्धारमध्यमग्रामौ यदि भ्रान्त्या प्रकल्पितौ ॥
तर्ह्येतल्लक्षणं प्रोक्तमर्थाङ्गीकारमात्रतः ।
षड्जग्रामान्यथासिद्धे फलाभावाद्यतस्तयोः ॥
हनूमान् स्वयमप्याह न तौ ग्रामौ मताविति ।
श्रुतयो द्वादशैवात्र स्वरस्थानतयोदिताः ॥
तथोक्तोर्वरिताः सर्वा स्वरस्थानतया दिशेत् ।
तच्छ्रुतिस्थस्वरोत्पन्नप्रस्तारप्राप्तमेलजान् ॥

युक्तोद्ग्राहयुजो रागान् कल्पयन्तु मनस्विनः ।
संवादिनौ न चेदुक्तस्थानगौ शुद्धकोमलौ ॥
धौ यवार्धयवाभ्यां हि कार्यौ न्यूनौ विचक्षणैः ।
भरतादिमुनीन्द्राणामभिप्रायविदा मया ॥
लक्षणानि कृतान्यस्मिन् सूरिसम्मोदसिद्धये ।
नवत्रयोदशाप्यन्ये श्रुतीर्मध्ये व्यवस्थिताः ॥
आहुः संवादिनां चात्र विवेकज्ञानसम्भवाः ।
चतुर्भिस्तु सरी प्रोक्तौ गनी द्वाभ्यां व्यवस्थितौ ॥
चतुर्भिमपधा युक्ता एवं श्रुतिविनिर्णयः ।
अन्यांश्च विकृतान् कुर्याच्छ्रुतिक्षेत्रे विभागतः ॥
प्रत्यक्षमानसिद्धार्थे शाब्दबोधो पटुर्भवेत् ।
एवं चोभयपक्षज्ञज्ञातमेलसमुद्भवाः ।
अनन्ता अपि रागास्युर्गमकोद्ग्राहभेदतः ॥

इति श्रीनिवासकृतरागतत्त्वविबोधः समाप्तिमगमत् ।

**रागतत्त्वविबोधः समाप्तः ॥**

* विक्रमसंवत् १९७७ कार्त्तिककृष्णैकादश्यामिन्दुवासरे वटपत्तननिवासिना रेवाशंकरतनूजेन पुरुषोत्तमशास्त्रिणा लेखनक्रमः समाप्तिं नीतः संशोधितश्च । श्रीरस्तु ।

बिकानेरमहाराजपुस्तकालयपुस्तकमादर्शीकृत्य लिखितः शोधितश्च ॥